अर्धभागेन परमो भाज्यं षड्भिस्तदन्तरम् ।
अन्ये भागोत्तराः पञ्च सप्तैव मुदया मताः ॥ १०५ ॥

इदानीमभिधास्यामः सिंहकर्णस्य लक्षणम् ।
छाद्योदयोदयः स स्याद् दशभिस्तं विभाजयेत् ॥ १०६ ॥

तैः स्यात् षोडशभिर्भागैस्तस्यैव तलविस्तृतिः ।
ऊर्ध्वतश्चतुरो भागांस्त्यक्त्वा शङ्कुं निवेशयेत् ॥ १०७ ॥

चतुरश्रीकृते क्षेत्रे कर्णेनारभ्य शङ्कुतः ।
ततो वृत्तं लिखेत् पश्चाच्छङ्कुं समभिरोपयेत् ॥ १०८ ॥

ऊर्ध्वदेशात् तु भागेन स स्याद् भागचतुष्टये ।
लिखेद् वृत्तं त्रिभागोनद्व्यंशकर्कटकोद्भवम् ॥ १०९ ॥

तस्योपरिष्टात् तदनु ग्रीवा कार्यैकभागिनी ।
गर्भे शृङ्गाग्रयोर्मध्ये तिर्यग् भागद्वयं भवेत् ॥ ११० ॥

मध्ये कर्णाग्रयोस्तिर्यक् कार्यं भागत्रयं बुधैः ।
ग्रीवाया उपरिष्टाच्च भागमेकं शिखा भवेत् ॥ १११ ॥

शिखाग्रमुपरिष्टाच्च कर्तव्यं गर्भसङ्गतम् ।
शिखाग्रमूर्ध्वतस्तद्वदर्धभागावलम्बितम् ॥ ११२ ॥

भागावलम्बि कर्णाग्रं स्कन्धाग्रं तावदेव तु ।
स्यात् कर्णखण्डयोर्मूलं स्कन्धदेशस्य सङ्गतम् ॥ ११३ ॥

स्वस्तिको द्व्यंशविस्तारायामः प्राग्वृत्तमध्यतः ।
एवं शङ्कुमधःसूत्रादूर्ध्वं भागो( गे ) निवेशयेत् ॥ ११४ ॥

भागे निवेशितं कुर्यात् पूर्ववृत्ताद्यशेषतः ।
स्वस्तिकान्तं च पूर्वोक्तं पूर्ववत् सर्वमाचरेत् ॥ ११५ ॥

तलसूत्रादुपर्यंशैश्चतुर्भिर्गर्भतः समः( मम् )
द्वाभ्यां द्वाभ्यामुभयतो भागाभ्यां तिर्यगेव च ॥ ११६ ॥

भागेन तद्वदेवाधःसूत्रादुपरि गर्भतः ।
चतुर्भिश्च चतुर्भिश्च भागैरुभयतः समम् ॥ ११७ ॥

वृत्तार्धानि लिखेदेककर्णयुक्तानि पूर्ववत् ।
एकशृङ्गाणि च ग्रीवास्वस्तिकार्धयुतानि च ॥ ११८ ॥

तलसूत्रबहिर्देशाद् बाह्यवृत्तसमुद्भवः ।
पदत्रयप्रविष्टः स्यात् पार्ष्णिरत्र परिस्फुटः ॥ ११९ ॥

त्रिवलीललितो नाम सिंहकर्णोऽयमीरितः ।
दशभागीकृते प्राग्वदुदये तत्प्रमाणतः ॥ १२० ॥

चतुर्दशांशविस्तीर्णे कर्णे सार्धे वलिर्भवेत् ।
दशभागोच्छ्रिते प्राग्वत् स्यात् त्रयोदशविस्तृतः ॥ १२१ ॥

क्षेत्र एकवलिर्नाम सिंहकर्णस्तथापरः ।
एते शोभान्विताः कार्यास्त्र्यश्रसंवरणास्त्रयः ॥ १२२ ॥

प्रासादानामिति निगदितं द्वारमानं निवेशः
स्तम्भानां च स्फुटमिह वितानानि तेषां लुमाश्च ।

वृत्तच्छाद्योच्छ्रितिरभिहिता छाद्यसंस्था लुमाश्च
प्रोक्ताः सप्त प्रथितमपरं सिंहकर्णप्रमाणम् ॥ १२३ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे

पादद्वारस्तम्भनिवेशवितानलुमालक्षणवृत्तच्छाद्यलुमासिंहकर्णप्रमाणं नाम

चतुष्पञ्चाशोऽध्यायः ॥